जनयति विजयं सदा जनानां
युधि सुसमाहितमैश्वरं यथा ऽस्त्रम्. ॥ ३२ ॥

इदमित्यादि—इदं महाकाव्यम्। उक्तेर्वचनस्य यो मार्गः पन्थाः सुसंस्कृतशब्दलक्षणः प्रपञ्चितः तेन चित्रं विस्मयनीयम् । सुसमाहितं अलङ्कारयुक्तम् । अधिगतं परिज्ञातं सज्जनानां विवदिषतां वक्तुमिच्छतां वदतां च वक्तुं प्रवर्तमानानां सदा विजयं जनयति । सन्निबन्धात् शोभनबन्धात्कारणात् । यथास्त्रमैश्वरं पाशुपतम्। अधिगतमुक्तिमार्गं अधिगतः प्राप्तः प्रज्ञातो मोचनमार्गः क्षेपणमार्गो येन। चित्रं नानावर्णकेन चित्रितत्वात्। सुसमाहितं युधि संग्रामे विजयं विदधाति तद्वत् ॥

तस्मादादरः कर्तव्य इति तत्रापि य एव व्याकरणमधीतवान् तस्यैवात्रादरो युक्त इति दर्शयन्नाह—

१६२३–दीप-तुल्यः प्रबन्धो ऽयं शब्द-लक्षण-चक्षुषाम् ॥
हस्ता ऽमर्ष इवा ऽन्धानां भवेद् व्याकरणादृते. ३३

दीपतुल्य इत्यादि—अयं प्रबन्धो महाकाव्यसंज्ञकः । प्रबध्यते विरच्यत इति कृत्वा । शब्दलक्षणमेव चक्षुर्येषां तेषां दीपतुल्यः । अत एवैतत्काव्याधिगमात् स्वातन्त्र्येणान्यानपि शब्दान् प्रयोक्तुं क्षमत्वात् । व्याकरणादृते विना हस्तामर्ष इवान्धानां हस्तामर्ष इवावबोधः यथा अन्धानां हस्तेन घटपटादिवत् । स्वपरामृश्यसंस्थानमात्रपरिज्ञानं यथावस्थितस्वरूपपरिज्ञानं एवमनधीतव्याकरणानां न शब्दस्वरूपपरिज्ञानं अन्यत्र शब्दश्रवणात् ततश्च तत्स्वरूपापरिज्ञानात् कुतोऽप्यन्यशब्दप्रयोग इति ॥

एवं च कृत्वा विदुषोऽनुरुध्यमानेन मयेदं काव्यं कृतमिति दर्शयन्नाह—

१६२४–व्याख्या-गम्यमिदं काव्य-
मुत्सवः सु-धियामलम्, ॥
हता दुर्-मेधसश् चा ऽस्मिन्
विद्वत्-प्रिय-तया मया. ॥ ३४ ॥

व्याख्यागम्यमित्यादि—व्याख्यागम्यं व्याख्यानाद्विना बोद्धुं न शक्यते । किमर्थमीदृशं कृतमिति चेत् उत्सवः सुधियामलं शास्त्रे क्षुण्णबुद्धीनां परं प्रमोदो जायते । एवं च सत्यस्मिन् काव्ये विषयभूतदुर्मेधसो व्याकरणबाह्याः मया हता नानुगृहीताः । तस्माद्विद्वत्प्रियतया विद्वांसः प्रिया यस्य मम विद्वत्प्रियः तद्भावस्तत्ता तया हेतुभूतयेति ॥

यत्रेदं काव्यं कृतं तद्दर्शयन्नाह—

१६२५—काव्यमिदं विहितं मया वलभ्यां
श्रीधरसेन-नरेन्द्र-पालितायाम्, ॥
कीर्तिरतो भवतान् नृपस्य, तस्य
प्रेम-करः क्षिति-पो यतः प्रजानाम्. ॥ ३५ ॥

## इति भट्टि-काव्ये द्वाविंशतितमः सर्गः ॥
## समाप्तश्चायं भट्टि-काव्य-ग्रन्थः ॥

काव्यमित्यादि—मयेदं काव्यं विहितं कृतम् । श्रीधरसूनुना नरेन्द्रनाम्ना नृपेण पालितायां रक्षितायां वलभ्यां वलभीनामपुर्याम् । अत एव काव्यविधानाय या कीर्तिः सा तस्यैव राज्ञो भवतात् । आशिषि तातङ् । यतः प्रजानां प्रेमकरः प्रेमानुकूलः । आनुलोम्ये टः ॥

इति वलभीवास्तव्यस्य श्रीस्वामिसूनोर्भट्टमहाब्राह्मणस्य महावैयाकरणस्य कृतौ रावणवधे महातिङन्तकाण्डे लुङ्विलसितनाम्नो नवमपरिच्छेदस्य जटीश्वरो जयदेवो जयमङ्गल इति च नामभिस्त्रिभिः सुप्रसिद्धस्य अनेकशास्त्रव्याख्यानकृतौ टीकायां काव्यस्य 'अयोध्या-प्रत्यागमनं' नाम द्वाविंशः सर्गः ॥

॥ जयमङ्गलकृता टीका समाप्ता ॥

